श्रीगणेशायनमः विश्वेश्वरंसांबमूर्तिंप्रणिपत्यगिरंगुरुं टीकांशिशुहितांकुर्वेतर्कसंग्रहदीपि- टी.
१ कां १ चिकीर्षितस्यग्रंथस्याविघ्नपरिसमाप्त्यर्थंशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकंइ
ष्टदेवतानमस्कारलक्षणंमंगलंशिष्यशिक्षार्थंनिबध्नन्चिकीर्षितंप्रतिजानीते ॥ निधायेति॥न
नुमंगलस्यसमाप्तिसाधनत्वंनास्ति ॥ मंगलेकृतेपिकिरणावल्यादावसमाप्तिदर्शनात्॥मंगला
भावेपिकादंबर्यादौसमाप्तिदर्शनात्॥अन्वय व्यतिरेकव्यभिचारादितिचेन्न॥ किरणावल्यांदौवि
घ्नबाहुल्यात्समाप्त्यभावः॥कादंबर्यादौतुग्रंथाद्बहिरेवमंगलंकृतम्॥अतोनव्यभिचारः॥ननुमंग
लस्यकर्त्तव्यत्वेकिंप्रमाणमितिचेन्न॥शिष्टाचारानुमितश्रुतेरेवप्रमाणत्वात्॥समाप्तिकामोमंगल
माचरेदितिश्रुतेः॥ तथाहि॥ मंगलंवेदबोधितकर्त्तव्यताकं॥अलौकिकावि गीतशिष्टाचारविषय १
त्वात्॥दर्शादिवत्॥ भोजनादौव्यभिचारवारणायालौकिकेति रात्रिश्राद्धादौव्यभिचारवारणाय-

अविगीतेति शिष्टपदंस्पष्टार्थं नकुर्यान्निष्फलंकर्मेतिजलताडनादेरपिनिषिद्धत्वादिति तर्क्यंते प्रतिपाद्यंतेइतितर्काः द्रव्यादिपदार्थाः तेषांसंग्रहः संक्षेपेणस्वरूपकथनंक्रियतइत्यर्थः कस्मैप्रयोजनायेत्यतआह सुखबोधायेति सुखेनअनयासेनबोधः पदार्थज्ञानंतस्मैइत्यर्थः ॥ ननुबहुषुतर्कग्रंथेषुसत्सुकिमर्थमपूर्वग्रंथः क्रियतइत्यतआह बालानामिति तेषांअतिविस्तृतत्वात् बालानांबोधोनभवतीत्यर्थः ग्रहणधारणपटुर्बालः ननुकानंधयः किंकृत्वाक्रियतइत्यतआह निधायेति विश्वेश्वरंजगन्नियंतारंसांबंहृदिनिधायनिरंतरंस्थापयित्वासर्वदातद्ध्यानपरोभूत्वेत्यर्थः गुरूणांविद्यागुरूणांवंदनंनमस्कारंकृत्वेत्यर्थः ॥ पदार्थान् विभजते ॥ द्रव्येति ॥ पदस्यार्थः पदार्थः इतिव्युत्पत्त्याअभिधेयत्वंपदार्थसामान्यलक्षणंलभ्यते ननुविभागादेवससत्वेलब्धेससग्रहणंव्यर्थमितिचेन्न न्यूनाधिकसंख्याव्यवच्छेदार्थत्वात् ॥ नन्वतिरिक्तः पदार्थः प्रमितोवानवा नाद्यः

प्रमितस्यनिषेधायोगात् नांत्यः प्रतियोगिप्रमितिंविनानिषेधानुपपत्तेरितिचेन्न पदार्थत्वंद्रव्या
दिसप्तान्यतमत्वव्याप्यमितिव्यवच्छेदार्थत्वात् ननुसप्तान्यतमत्वंसप्तभिन्नभिन्नत्वमिति वक्त
व्यं एवंचसप्तभिन्नस्याप्रसिद्धत्वात्सप्तान्यतमत्वंकथमितिचेन्न द्रव्यादिसप्तान्यतमत्वं द्रव्या
दिभेदसप्तकाभाववत्त्वमित्युक्तत्वात् एवमग्रेपिद्रष्टव्यं द्रव्यंविभजते तत्रेति तत्रद्रव्यादि
मध्येद्रव्याणिनवेत्यन्वयः कानितानीत्यतआह पृथिवीत्यादि ननुतमसोदशमद्रव्यस्य-
विद्यमानत्वात्कथंनवद्रव्याणि तथाहि नीलंतमश्चलतीत्यबाधितप्रतीतिबलात् ॥नीलरू
पाधारतयाक्रियाधारतयाचद्रव्यत्वंतावत्सिद्धं तत्रतमसोनाकाशादिपंचकेंतर्भावः रूपवत्त्वात्
अतएवनवायौसदागतिमत्त्वाभावाच्च नापितेजसि भास्वररूपाभावात् उष्णस्पर्शाभावाच्च-
नापिजले शीतस्पर्शाभावात्नीलरूपाश्रयत्वाच्च नापिपृथिव्यां गंधाभावात्स्पर्शरहितत्वाच्च

तस्मात्तमोदशमद्रव्यमितिचेन्न नमसस्तेजोभावरूपवत्त्वात् तथाहि तमोनरूपवद्द्रव्यं आलोका
सहकृतचक्षुर्ग्राह्यत्वात् आलोकाभाववत् रूपिचाक्षुषप्रमायामालोकस्यकारणत्वात् तस्मात्प्रौढ
प्रकाशकतेजःसामान्याभावस्तमः तत्रनीलंतमश्चलतीतिप्रत्ययोभ्रमः अतोनवद्रव्याणीतिसि
द्धं ॥ द्रव्यत्वजातिमत्त्वंगुणवत्त्वंवा द्रव्यसामान्यलक्षणम् लक्ष्यैकदेशावृत्तित्वंअव्याप्तिःयथा
गोःकपिलत्वम् अलक्ष्यवृत्तित्वंअतिव्याप्तिः यथागोःशृंगित्वं लक्ष्यमात्रावर्तनंअसंभवःय
थागोरेकशफत्वं एतद्दूषणत्रयरहितोधर्मोलक्षणं सएवासाधारणधर्मइत्युच्यते यथागोःसा-
स्नादिमत्त्वेसतिशृंगित्वम् लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम् व्यावर्त्तकस्यैवलक्ष
णत्वेव्यावृत्तावभिधेयत्वादौच अतिव्याप्तिवारणायतद्भिन्नत्वंधर्मविशेषणंदेयं व्यवहारस्या
४ पिलक्षणप्रयोजनत्वेतुनदेयं व्यावृत्तेरपिव्यवहारसाधनत्वात् ननुगुणवत्त्वंनद्रव्यलक्षणं आ

स. द्यक्षणेउत्पन्नविनष्टद्रव्येचाव्याप्तेरितिचेन्न गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्यवि दी.
३ वक्षितत्वात् ननुएवमपिएकंरूपंरसात्पृथगितिव्यवहारात् रूपादौअतिव्याप्तिरितिचेन्न ए-
कार्थसमवायादेवतादृशव्यवहारोपपत्तौगुणेगुणानंगीकारात् गुणान्विभजते रूपेति द्रव्यक
र्मभिन्नत्वेसतिसामान्यवान्गुणः गुणत्वजातिमान्वाननुलघुत्वमृदुत्वकठिणत्वादीनांविद्य
मानत्वात्कथंचतुर्विंशतिर्गुणाइतिचेन्न लघुत्वस्यगुरुत्वाभावरूपत्वात् मृदुत्वकठिणत्वयोः
अवयवसंयोगविशेषरूपत्वात् कर्मविभजते उत्क्षेपणेति संयोगत्वभिन्नत्वेसतिसंयोगासम
वायिकारणंकर्म कर्मत्वजातिमद्वा भ्रमणादीनामपिगमनेऽन्तर्भावात् नपंचत्वविरोधः सा
मान्यंविभजते परमिति परमधिकवृत्ति अपरंन्यूनवृत्ति सामान्यादिचतुष्टयेजातिर्न विशे ३
षंविभजते नित्यद्रव्येति पृथिव्यादिचतुष्टयस्यपरमाणवः आकाशादिपंचकंचनित्यद्रव्या

णि समवायस्यभेदोनास्तीत्याह समवायस्त्विति अभावंविभजते प्रागभावइति तत्रउ
द्देशक्रमानुसारात् प्रथमंपृथिव्यालक्षणमाह गंधवतीति नाम्नापदार्थसंकीर्तनमुद्देशः-
उद्देशक्रमेचसर्वत्रेच्छैवनियामिका ननुसुरभ्यसुरभ्यवयवारब्धेद्रव्येपरस्परविरोधेनगं
धानुत्पादादव्याप्तिः नचतत्रगंधप्रतीत्यनुपपत्तिरितिवाच्यं अवयवगंधस्यैवतत्रप्रती
तिसंभवेनचित्रगंधानंगीकारात् किंचोत्पन्नविनष्टघटादावव्याप्तिरितिचेन्न गंधसमाना
धिकरणद्रव्यत्वापरजातिमत्त्वस्यविवक्षितत्वात् ननुजलादावपिगंधप्रतीतेरतिव्याप्तिरि
तिचेन्न अन्वयव्यतिरेकाभ्यांपृथिवीगंधस्यैवतत्रभानांगीकारात् ननुतथापिकालस्यस
र्वाधारतयासर्वेषांलक्षणानांकालेअतिव्याप्तिरितिचेन्न सर्वाधारताप्रयोजकसंबंधभिन्नसंबं
धेनलक्षणवत्त्वस्यअभिमतत्वात् पृथिवींविभजते साद्विविधेति नित्यत्वंध्वंसाप्रतियो-

गित्वं ध्वंसप्रतियोगित्वं अनित्यत्वं प्रकारांतरेणविभजते पुनरिति आत्मनोभोगायतनंशरी
रं यदवच्छिन्नात्मनिभोगोजायतेतद्भोगायतनं सुखदुःखान्यतरसाक्षात्कारोभोगः शब्देत-
रोद्भूतविशेषगुणानाश्रयत्वेसतिज्ञानकारणमनःसंयोगाश्रयत्वमिंद्रियत्वम् शरीरेंद्रिय
भिन्नोविषयः एवंचगंधवच्छरीरंपार्थिवशरीरं गंधवदिंद्रियंपार्थिवेंद्रियं गंधवान्विषयः
पार्थिवविषयइति तत्तल्लक्षणंबोध्यं पार्थिवशरीरंदर्शयति शरीरमिति इंद्रियंदर्शयति इंद्रि
यमिति गंधग्राहकमिति प्रयोजनकथनं घ्राणमितिसंज्ञा नासाग्रेत्याश्रयोक्तिः एवमुत्तर
त्रापिज्ञेयम् पार्थिवविषयंदर्शयति मृत्पाषाणेति अपांलक्षणमाह शीतेति उत्पन्नविनष्टज
ले अव्याप्तिवारणायशीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्वेतात्पर्यं शीतंशिला
तलमित्यादौजलसंबंधादेवशीतस्पर्शभानमितिनातिव्याप्तिः अन्यत्सर्वंपूर्ववदित्याव्याख्ये

यं तैजसोलक्षणमाह उष्णस्पर्शवदिति उष्णंजलमिति प्रतीतेस्तेजः संबंधानुविधायित्वा-
न्नातिव्याप्तिः विषयंविभजते भौमेति ननुसुवर्णंपार्थिवं पीतत्वात् गुरुत्वात् हरिद्रादिव
त् इतिचेन्न अत्यंतानलसंयोगेसतिघृतादौद्रवत्वनाशदर्शनेनजलमध्यस्थघृतेनाशादर्श
नेन असतिप्रतिबंधेपार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात् सु
वर्णस्य अत्यंतानलसंयोगेसति अनुच्छिद्यमानद्रवत्वाधिकरणत्वेनपार्थिवत्वानुपपत्तेः
तस्मात्पीतद्रव्यद्रवत्वनाशप्रतिबंधकतयाद्रवद्रव्यांतरसिद्धौनैमित्तिकद्रवत्वाधिकरण
तयाजलत्वानुपपत्तेः रूपवत्तयावाय्वादिषु अनंतर्भावात्तैजसत्वसिद्धिः तस्यउष्ण
स्पर्शभास्वररूपयोः उपष्टंभकपार्थिवरूपस्पर्शाभ्यां प्रतिबंधादनुपलब्धिः तस्मात्सुव
र्णं तैजसमितिसिद्धं वायुंलक्षयति रूपरहितेति आकाशादावतिव्याप्तिवारणायस्प

र्शवानिति पृथिव्यादावतिव्याप्तिवारणायरूपरहितेति नतुप्राणस्यकुत्रांतर्भावइत्यतआ
ह शरीरेति सन्चेति एकएव प्राणः स्थानभेदात् प्राणापानादिशब्दैर्व्यवह्रियतइत्यर्थः स्पर्शा
नुमेयोवायुः तथाहि योयंवायौवातिसति अनुष्णाशीतस्पर्शोभासते सःस्पर्शःक्वचिदाश्रि
तः गुणत्वात् रूपवत् नचास्यपृथिव्याश्रयः उद्भूतस्पर्शवत् पार्थिवस्यउद्भूतरूपवत्त्वनिय
मात् नजलतेजसी अनुष्णाशीतत्वात् नविभुचतुष्टयम् सर्वत्रोपलब्धिप्रसंगात् नम
नः परमाणुस्पर्शस्यअतींद्रियत्वात् तस्माद्यःप्रतीयमानस्पर्शाश्रयःसवायुः ननुवायुः
प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवदितिचेन्न उद्भूतरूपवत्त्वस्यउपाधित्वात् यत्रद्र-
व्यत्वेसतिबहिरिंद्रियप्रत्यक्षत्वंतत्ररूपवत्त्वमिति साध्यव्यापकत्वं पक्षेसाधनाव्यापकत्व
म् नन्वेवंतप्तवारिस्थतेजसोप्यप्रत्यक्षत्वापत्तिः इष्टत्वात् तस्माद्रूपरहितत्वाद्वायुरप्रत्यक्षः

इदानींकार्यरूपपृथिव्यादिचतुष्टयस्यउत्पत्तिविनाशक्रमः कथ्यते ईश्वरस्यचिकीर्षावशात्
परमाणुषुक्रियाजायते ततः परमाणुद्वयसंयोगेनद्व्यणुकमुत्पद्यतेत्रिभिर्द्व्यणुकैःत्र्यणुकं
एवंचतुरणुकादिक्रमेणमहापृथिवी महत्यआपः महत्तेजः महान्वायुरुत्पद्यते एवंउत्पन्न
स्यकार्यद्रव्यस्यसंजिहीर्षावशात् क्रिययापरमाणुद्वयविभागेसतिद्व्यणुकनाशः ततस्त्र्य
णुकस्यततश्चतुरणुकस्यइत्येवंपृथिव्यादिनाशः असमवायिकारणनाशात् द्व्यणुकना
शः समवायिकारणनाशात्त्र्यणुकनाशइतिसंप्रदायः सर्वत्र असमवायिकारणनाशात्
द्रव्यनाशइतिनवीनाः किंपुनःपरमाणुसद्भावेप्रमाणं उच्यते जालसूर्यमरीचिस्थंसूक्ष्मत
मंयद्रजउपलभ्यतेतत्सावयवम् चाक्षुषद्रव्यत्वात् पटवत् त्र्यणुकावयवोपिसावयवः मह
दारंभकत्वात् तंतुवत् योद्व्यणुकावयवःसएवपरमाणुः सचनित्यः कार्यत्वेअनवस्थाप्रसं

त.सं. गात् सृष्टिप्रलय सद्भावे किंमानं धातायथापूर्वमकल्पयदित्यादिश्रुतिः प्रमाणं सर्वकार्यद्रव्य दी:
६ ध्वंसः अवांतरप्रलयः सर्वभावकार्यध्वंसो महाप्रलयइतिविवेकात् आकाशंलक्षयति शब्दगुण
कमिति ननुआकाशमपिकिंपृथिव्यादिवन्नाना नेत्याह तच्चैकमिति भेदेप्रमाणाभावा
दित्यर्थः एकत्वादेवसर्वत्रशब्दोपलब्धेर्विभुत्वमंगीकर्तव्यमित्याह विभ्विति सर्वमूर्तद्रव्यसं
योगित्वंविभुत्वं मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वंक्रियावत्त्वंवा विभुत्वादेव आत्मवत् नित्य
त्वमित्याह नित्यंचेति कालंलक्षयति अतीतेति सर्वाधारः कालः सर्वकार्यनिमित्तकारणंच दि-
शोलक्षणमाह प्राचीति दिगपिकार्यमात्रेनिमित्तकारणं आत्मनोलक्षणमाह ज्ञानेति आ
त्मानंविभजते सद्विविधइति परमात्मनोलक्षणमाह तत्रेति नित्यज्ञानाधिकरणत्वंईश्वर ६
त्वम् ननुईश्वरसद्भावे किंप्रमाणं ननावत्प्रत्यक्षम् तद्धिबाह्यं अभ्यंतरंवा नाद्यः अरू

पिद्रव्यत्वात् नांत्यः आत्मसुखाद्यतिरिक्तत्वात् नाप्यनुमानंलिंगाभावादितिचेन्न अंकु
रादिकंकर्तृजन्यं कार्यत्वात् घटवदित्यनुमानस्यप्रमाणत्वात् उपादानगोचरापरोक्षज्ञानचिकी
र्षाकृतिमत्त्वम् कर्तृत्वं उपादानंसमवायिकारणं सकलपरमाण्वादिसूक्ष्मदर्शित्वात्सर्वज्ञत्वं यः
सर्वज्ञःससर्वविदित्यागमोपितत्रप्रमाणम् जीवस्यलक्षणमाह॥जीवइति सुखादिकंजीवलक्ष
णम् ननुमनुष्योहंब्राह्मणोहंइत्यादौसर्वत्र अहंप्रत्ययेशरीरस्यैवविषयत्वात्शरीरमेव आत्मे
तिचेन्न शरीरस्यकरपादादिनाशेशरीरनाशात् आत्मनोपिनाशप्रसंगात् नापिइंद्रियाणामा-
त्मत्वम् योहंघटमद्राक्षंसोहंइदानींत्वचास्पृशामीत्यनुसंधानाभावप्रसंगात् अन्यानुभूतेअन्य
स्यानुसंधानायोगात् तस्माद्देहेंद्रियव्यतिरिक्तोजीवः सुखदुःखादिवैचित्र्यात् प्रतिशरीरंभि
न्नःसचनपरमाणुः शरीरव्यापिसुखाद्यनुपलब्धिप्रसंगात् नमध्यमपरिमाणवान् तथा

सत्यनित्यत्वप्रसंगेनकृतनाशाकृताभ्यागमप्रसंगात् तस्मान्नित्योविभुर्जीवः मनसोलक्षण
माह सुखेति स्पर्शरहितत्वेसतिक्रियावत्त्वमनसोलक्षणं मनोविभजते तच्चेति एकैक
स्यात्मनएकैकंमनइत्यात्मनामनेकत्वात् मनसोप्यनेकत्वमित्यर्थः परमाणुरूपमिति म
ध्यमपरिमाणत्वेऽनित्यत्वप्रसंगादित्यर्थः ननुमनोविभु स्पर्शरहितद्रव्यत्वात् आकाशा
दिवत्इतिचेन्न मनसोविभुत्वेसत्यात्ममनःसंयोगस्य असमवायिकारणस्य अभावाज्ज्ञा
नानुत्पत्तिप्रसंगात् नचविभुद्वयस्यसंयोगोऽस्त्विति वाच्यं विभुद्वयसंयोगस्यनित्यत्वेनसु
षुप्त्यभावप्रसंगात् पुरीततिव्यतिरिक्तप्रदेशात्ममनःसंयोगस्यसर्वदाविद्यमानत्वात् अ
णुत्वेतुयदामनःपुरीततिंप्रविशतितदासुषुप्तिः यदानिःसरतितदाज्ञानोत्पत्तिरित्यणुत्वसि
द्धिः रूपंलक्षयति चक्षुरिति संख्यादावतिव्याप्तिवारणायमात्रपदं रूपत्वेअतिव्याप्तिवार-

णायगुणपदं ननुअव्याप्यवृत्तिनीलादिसमुदायएवचित्ररूपमितिचेन्नरूपस्यव्याप्यवृत्तित्व
नियमात् ननुचित्रपटेअवयवरूपस्यप्रतीतिरितिचेन्न व्याप्यवृत्तिजातीयगुणानामव्याप्यवृ
त्तित्वविरोधात् नचप्रत्यावयवीनिरूपएवेतिवाच्यं रूपस्यव्याप्यवृत्तित्वनियमात् रूपरहित
त्वेनपटस्यअप्रत्यक्षत्वप्रसंगात् नचरूपवत्समवेतत्वंप्रत्यक्षत्वप्रयोजकम् गौरवात् तस्मा
त्पटस्यप्रत्यक्षत्वानुपपत्त्याचित्ररूपसिद्धिः रसंलक्षयति रसनेति रसत्वेअतिव्याप्तिवारणाय
गुणपदं रसस्याश्रयमाह पृथिवीति आश्रयंविभज्यदर्शयति पृथिव्यामिति गंधंलक्षयति
घ्राणेति गंधत्वेअतिव्याप्तिवारणायगुणपदं स्पर्शंलक्षयति त्वगिति स्पर्शत्वेअतिव्याप्तिवार
णायगुण पदम् संयोगादावतिव्याप्तिवारणायमात्रपदं पाकजमिति पाकस्तेजःसंयोगः
तेनपूर्वरूपंनश्यतिरूपांतरमुत्पद्यतेइत्यर्थः अत्रपरमाणुष्वेवपाकः नद्व्यणुकादौ आम

निक्षिप्तघटे परमाणुषु रूपांतरोत्पत्तौ पाकेन श्यामघटनाशेन पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्प
त्तिः तत्र परमाणवः समवायिकारणं तेजःसंयोगोऽसमवायिकारणं अदृष्टादिकं निमित्तका
रणं द्व्यणुकादिरूपे कारणरूपमसमवायिकारणमिति पीलुपाकवादिनो वैशेषिकाः पूर्वघट
स्य नाशं विनैवावयविन्यवयवेषु परमाणुपर्यंतेषु युगपत् रूपांतरोत्पत्तिरिति पिठरपाकवा
दिनो नैय्यायिकाः अत एव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः अन्यत्र जलादावित्यर्थः
नित्येति परमाणुगतमित्यर्थः अनित्यगतमिति द्व्यणुकादिनिष्ठमित्यर्थः रूपादिच
तुष्टयमुद्भूतं प्रत्यक्षं अनुद्भूतमप्रत्यक्षम् उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः तदभावः
अनुद्भूतत्वम् संख्यां लक्षयति एकेति परिमाणं लक्षयति मानेति परिमाणं विभजते
तच्चेति भावप्रधानो निर्देशः अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं चेत्यर्थः पृथक्त्वं लक्षयति पृथगिति इ

दमस्मात्पृथगितिव्यवहारकारणमित्यर्थः संयोगंलक्षयति संयुक्तेति इमौसंयुक्तावितिव्य
वहारहेतुरित्यर्थः संख्यादिलक्षणेषुसर्वत्रदिक्कालादावतिव्याप्तिवारणाय असाधारणेति सं
योगोद्विविधः कर्मजःसंयोगजश्चआद्योहस्तक्रिययापुस्तकसयोगः द्वितीयोहस्तपुस्तक
संयोगात्कायपुस्तकसंयोगः अव्याप्यवृत्तिःसयोगः स्वात्यंताभावसमानाधिकरणत्वमव्या
प्यवृत्तित्वं विभागंलक्षयति संयोगेति कालादावतिव्याप्तिवारणायगुणइति रूपादावतिव्या
प्तिवारणायसंयोगनाशकइति विभागोपिद्विविधः कर्मजोविभागजश्च आद्योहस्तपुस्तक
विभागः द्वितीयः कायपुस्तकविभागः परत्वापरत्वयोर्लक्षणमाह परापरेति परव्यवहार
कारणंपरत्वं अपरव्यवहारकारणमपरत्वमित्यर्थः विभजते तेद्विधेइति दिक्कृतयोरुदाहर
णमाह दूरस्थइति कालकृतेउदाहरति ज्येष्ठइति गुरुत्वंलक्षयति आद्येति द्वितीयादिपत

नस्यवेगासमवायिकारणकत्वात् वेगे अतिव्याप्तिवारणाय आद्येति द्रवत्वंलक्षयतिभाव-
स्यंदनेति स्यंदनंस्रवणंतेजःसंयोगजन्यंनैमित्तिकं तद्भिन्नंसांसिद्धिकम् पृथिव्यांनैमित्तिक
मुदाहरति घृतादाविति तेजासितदाह सुवर्णादाविति स्नेहंलक्षयति चूर्णेति कालादावति
व्याप्तिवारणायगुणइति रूपादावतिव्याप्तिवारणाय पिंडीभावहेतुरिति शब्दंलक्षयति
श्रोत्रेति शब्दत्वे अतिव्याप्तिवारणायगुणइति रूपादावतिव्याप्तिवारणायश्रोत्रेति शब्दस्त्रि
विधः संयोगजोविभागजः शब्दजश्चेति तत्राद्योभेरीदंडसंयोगजन्यः द्वितीयोवंशेछिद्यमा
नेदलद्वयविभागजन्यश्चटच्चटशब्दः भेर्यादिदेशमारभ्यश्रोत्रपर्यंतंद्वितीयादिशब्दाःशब्द
जाः बुद्धेर्लक्षणमाह बुद्धिरिति जानामीत्यनुव्यवसायगम्यज्ञानत्वमेवलक्षणमित्यर्थः बुद्धिं
विभजते सेति स्मृतेर्लक्षणमाह संस्कारेति भावनाख्यःसंस्कारः संस्कारध्वंसे अतिव्याप्तिवा

रणायज्ञानमिति घटादिप्रत्यक्षे अतिव्याप्तिवारणाय संस्कारजन्यमिति अनुभवं ल
क्षयति तद्भिन्नमिति स्मृतिभिन्नं ज्ञानमनुभव इत्यर्थः अनुभवं विभजते स द्विविध
इति यथार्थानुभवस्य लक्षणमाह तद्वतीति ननु घटे घटत्वमिति प्रमाणामव्याप्तिः घट
त्वे घटाभावादिति चेन्न यत्र यस्य यः संबंधोस्ति तत्र तस्य तत्संबंधानुभव इत्यर्थात् घटत्वेपि घ
टसंबंधोस्तीति नाव्याप्तिः सैवेति यथार्थानुभव एव शास्त्रे प्रमेत्युच्यत इत्यर्थः अयथार्थं लक्षय
ति तदभाववतीति ननु इदं संयोगीति प्रमायामतिव्याप्तिरिति चेन्न यदवच्छेदेन यत्संबंधाश्र
यस्तदवच्छेदेन तत्संबंधज्ञानस्य विवक्षितत्वात् संयोगावच्छेदकावच्छेदेन संयोगसंबंधस्य च
सत्वान्नातिव्याप्तिः संयोगावच्छेदेन संयोगसंबंधस्य सत्वान्नातिव्याप्तिः यथार्थानुभवं विभजते
यथार्थेति प्रसंगात् प्रमाकरणं विभजते तत्करणमिति प्रमाकरणमित्यर्थः प्रमाकरणं प्रमाणमि

त. ति प्रमाणसामान्यलक्षणं करणलक्षणमाह असाधारणेति साधारणकारणे दिक्कालादावतिव्या दी.
१० प्तिवारणाय असाधारणेति कारणलक्षणमाह कार्येति पूर्ववृत्ति कारणमित्युक्ते रासभादावतिव्याप्तिः
स्यादतो नियतेति तावन्मात्रेकृते कार्ये अतिव्याप्तिः अतः पूर्ववृत्तीति ननु तंतुरूपमपि पटं प्रति कार
णं स्यादिति चेन्न अनन्यथासिद्धत्वे सतीति विशेषणात् अनन्यथासिद्धत्वं अन्यथासिद्धिविरहः
अन्यथासिद्धिश्च त्रिविधा येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तत् तेन तं प्रति अन्यथासि
द्धं यथा तंतुना तंतुरूपं तंतुत्वं च पटं प्रति अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्व
मवगम्यते तं प्रति तदन्यथासिद्धं यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव पटं प्रति आकाशस्य अन्यत्र-
कॢप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतं अन्यथासिद्धम् यथा पाकजस्थले गंधं प्रति रूपप्रा १०
गभावस्य एवं च अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वं कार्यलक्षणमाह कार्यमिति कारणंविभ

जते कारणमिति समवायिकारणलक्षणमाह यत्समवेतमिति यस्मिन्समवेतमित्यर्थः असमवायिकार
णंलक्षयति कार्येणेति कार्येणेत्येतदुदाहरति तंतुसंयोगइति कार्येणपटेनएकस्मिन् तंतौसमवेतत्वा
त्तंतुसंयोगः पटस्य असमवायिकारणमित्यर्थः कारणेनेत्येतदुदाहरति तंतुरूपमिति कारणेन
पटेनसहएकस्मिन् तंतौसमवेतत्वात् तंतुरूपंपटरूपस्यअसमवायिकारणमित्यर्थः निमित्तका
रणंलक्षयति तदुभयेति समवाय्यसमवायिभिन्नंकारणंनिमित्तकारणमित्यर्थः करणलक्षणमु
पसंहरति तदेतदिति प्रत्यक्षलक्षणमाह तत्रेति प्रमाणचतुष्टयमध्यइत्यर्थः प्रत्यक्षज्ञानस्यलक्षण
माह इंद्रियेति इंद्रियंचक्षुरादिकम् अर्थोघटादिः तयोःसन्निकर्षःसंयोगादिः तज्जन्यंज्ञानमित्य
र्थः सविकल्पकस्यलक्षणमाह सप्रकारकमिति नामजात्यादिविशेषणविशेष्यावगाहिज्ञानमि
त्यर्थः निर्विकल्पकस्यलक्षणमाह निष्प्रकारमिति विशेषणविशेष्यसंबंधानवगाहिज्ञानमि

त्यर्थः ननु निर्विकल्पके किं प्रमाणमिति चेन्न गौरिति विशेषज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञान
त्वात् दंडीति ज्ञानवदित्यनुमानस्य प्रमाणत्वात् विशेषणज्ञानस्यापि सविकल्पकत्वे अनवस्था
प्रसंगात् निर्विकल्पकसिद्धिः सविकल्पकं लक्षयति सप्रकारकमिति नामजात्यादिविशेषणविशे-
ष्यसंबंधावगाहिज्ञानमित्यर्थः सविकल्पकमुदाहरति यथेति इंद्रियार्थसन्निकर्षं विभजते प्रत्यक्षे
ति संयोगसन्निकर्षमुदाहरति चक्षुषेति द्रव्यप्रत्यक्षे सर्वत्र संयोगः सन्निकर्ष इत्यर्थः आत्मा मन-
सा संयुज्यते मन इंद्रियेण इंद्रियमर्थेन ततः प्रत्यक्षज्ञानमुत्पद्यते संयुक्तसमवायमुदाहरति घटरूपे
ति तत्र युक्तिमाह चक्षुःसंयुक्त इति संयुक्तसमवेतसमवायमुदाहरति रूपत्वेति समवायमुदाह
रति श्रोत्रेणेति तदुपपादयति कर्णेति ननु दूरस्थशब्दस्य कथं श्रोत्रसंबंध इति चेन्न वीचीतरं
गन्यायेन कदंबमुकुलन्यायेन वा शब्दाच्छब्दांतरोत्पत्तिक्रमेणान्यदेशे जातस्य श्रोत्रदेशसंबंधा

त्प्रत्यक्षत्वसंभवः समवेतसमवायमुदाहरति शब्दत्वेति विशेषणविशेष्यभावमुदाहरति अभा
वेति तदुपपादयति घटाभाववदिति भूतलेघटोनास्तीत्यत्र अभावस्यविशेष्यत्वंद्रष्टव्यम् एतेन
अनुपलब्धेः प्रमाणांतरंनिरस्तं यद्यत्रघटोऽभविष्यत्तदाभूतलमिवाद्रक्ष्यत् दर्शनाभावान्नास्तीति
तर्कितप्रतियोगिसत्वविरोध्यनुपलब्धिसहकृतेंद्रियेणैव अभावज्ञानोपपत्तौ अनुलब्धेः प्रमाणां
तरत्वासंभवात् अधिकरणज्ञानार्थमपेक्षणीयेंद्रियस्यैवकरणत्वोपपत्तौ अनुपलब्धेः करणत्व
स्यायुक्तत्वात् विशेषणविशेष्यभावो विशेषणविशेष्यस्वरूपमेव नातिरिक्तः संबंधः प्रत्यक्षज्ञान
मुपसंहरन्तस्यकरणमाह एवमिति असाधारणकारणत्वादिंद्रियंप्रत्यक्षज्ञानकरणमित्यर्थः
प्रत्यक्षमुपसंहरति तस्मादिति अनुमानंलक्षयति अनुमितिकरणमिति अनुमितेर्लक्षणमाह
परामर्शेति ननुसंशयोत्तरप्रत्यक्षे अतिव्याप्तिः स्थाणुपुरुषसंशयानंतरंपुरुषत्वव्याप्यकरादि

मानयमिति परामर्शेसति पुरुषत्वे तिप्रत्यक्षजननात् नचतत्रानुमितिरेवेतिवाच्यम् पुरुषंसा
क्षात्करोमीत्यनुव्यवसायविरोधात् इतिचेन्न पक्षतासहकृतपरामर्शजन्यत्वस्यविवक्षितत्वात्
सिसाधयिषाविरहसहकृतसिद्ध्यभावःपक्षता साध्यसिद्धिरनुमितिप्रतिबंधिका सिद्धिसत्वे
पि अनुमिनुयामितीच्छायांसत्यांअनुमितिदर्शनात् सिसाधयिषाउत्तेजिका ततश्चोत्तेजका
भावविशिष्टमण्यभावस्यदाहकरणत्ववत् सिसाधयिषाविरहसहकृतसिद्ध्यभावस्यापि अनुमि
तिकारणत्वं परामर्शंलक्षयति व्याप्तीति व्याप्तिविषयकंयत्पक्षधर्मताज्ञानंसपरामर्शइत्यर्थः प
रामर्शमभिनीयदर्शयति यथेति अनुमितिमभिनयति तज्जन्यमिति परामर्शजन्यइत्यर्थः
व्याप्तेर्लक्षणमाह यत्रधूमइतिव्याप्तेरभिनयः साहचर्यनियमइतिलक्षणम् साहचर्यंसामाना १२
धिकरण्यम् तस्यनियमः हेतुसमानाधिकरणात्यंताभावाप्रतियोगिसाध्यसामानाधिकरण्यं

व्याप्तिरित्यर्थः पक्षधर्मतास्वरूपमाह व्याप्यस्येति स्वार्थानुमितिं दर्शयति स्वयमेवेति भूयो
दर्शनेनेति ननुपार्थिवत्वलोहलेख्यत्वादौ शतशः सहचारदर्शनेहीरकेपिव्यभिचारोपलब्धेर्भू
योदर्शनेनकथंव्याप्तिग्रहइतिचेन्न व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्यव्याप्तिग्राहक
त्वात् व्यभिचारज्ञाननिश्चयःशंकाच तद्विरहःक्वचित्तर्कात्क्वचित्स्वतःसिद्धएव धूमाग्निव्याप्ति
ग्रहेकार्यकारणभावभंगप्रसंगलक्षणस्तर्कोव्यभिचारशंकानिवर्तकः ननुसकलवह्निधूमयो
रसन्निकर्षात्कथंव्याप्तिग्रहइतिचेन्न धूमत्ववह्नित्वरूपसामान्यप्रत्यासत्त्यासकल धूमवह्नि
ज्ञानसंभवात् तस्मादिति लिंगपरामर्शादित्यर्थः परार्थानुमानमाह यत्त्विति यच्छब्दस्यत
त्परार्थानुमानमितितच्छब्देनान्वयः पंचावयववाक्यमुदाहरति यथेति अवयवस्वरूपमाह
प्रतिज्ञेति उदाहृतवाक्येप्रतिज्ञाविशेषमाह पर्वतोवह्निमानिति साध्यवत्तयापक्षवचनंप्रति

ज्ञा पंचम्यंतं तृतीयांतं वा लिंगप्रतिपादकवचनं हेतुः व्याप्तिप्रतिपादकमुदाहरणं व्याप्तिविशि
ष्टलिंगप्रतिपादकवाक्यमुपनयः हेतुसाध्यवत्तया पक्षप्रतिपादकवचनं निगमनं पक्षज्ञानं प्रतिज्ञा
प्रयोजनं लिंगज्ञानं हेतुप्रयोजनं व्याप्तिज्ञानमुदाहरणप्रयोजनम् पक्षधर्मताज्ञानमुपनयः अबा
धितत्वादिकं निगमनप्रयोजनम् अनुमितिकरणमाह स्वार्थेति ननु व्याप्तिस्मृतिपक्षताज्ञानाभ्या
मेवानुमितिसंभवे विशिष्टपरामर्शः किमर्थमंगीकर्त्तव्य इति चेन्न वह्निव्याप्यधूमवानयमिति श
ब्दपरामर्शस्थले परामर्शस्यावश्यकतया लाघवेन सर्वत्र परामर्शस्यैव कारणत्वात् लिंगं न करणम् अ
तीतादौ व्यभिचारात् व्यापारवत्कारणं करणमिति मते परामर्शद्वारा व्याप्तिज्ञानं करणं तज्जन्यत्वे स
ति तज्जन्यजनको व्यापारः अनुमानमुपसंहरति तस्मादिति लिंगं विभजते लिंगमिति अन्वयव्य
तिरेकि लक्षयति अन्वयेनेति हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः

केवलान्वयिनोलक्षणमाह अन्वयमात्रेति केवलान्वयिसाध्यकंकेवलान्वयि अत्यंताभावाप्रतियोगि
त्वंकेवलान्वयित्वम् ईश्वरप्रमाविषयत्वंसर्वपदाभिधेयत्वंचसर्वत्र अस्तीतिव्यतिरेकाभावः व्यतिरेक
मुदाहरति पृथिवीति ननुइतरभेदः प्रसिद्धोनवा आद्येयत्रप्रसिद्धस्तत्रहेतुसत्वे अन्वयित्वं अ
सत्वेअसाधारण्यं द्वितीयेसाध्यज्ञानाभावात्कथंतद्विशिष्टानुमितिः विशेषणज्ञानाभावेविशिष्टज्ञानानु
दयात् प्रतियोगिज्ञानाभावात् व्यतिरेकव्याप्तिज्ञानमपिनस्यादितिचेन्न जलादित्रयोदशान्योन्याभा
वानांत्रयोदशस्थप्रत्येकंप्रसिद्धानांमेलनंपृथिव्यांसाध्यत त्रयोदशत्वावच्छिन्नसाध्यस्यएकाधिकरणवृ
त्तित्वाभावात् नान्वयित्वासाधारण्ये प्रत्येकाधिकरणप्रसिद्ध्यासाध्यविशिष्टानुमितिर्व्यतिरेकव्या-
प्तिनिरूपणंचेति पक्षलक्षणमाह संदिग्धेति ननुश्रवणानंतरभाविमननस्थले अव्याप्तिः तत्रवेद
वाक्यैरात्मनोनिश्चितत्वेनसंदेहाभावात् किंच प्रत्यक्षेपिवन्हौयत्रेच्छयानुमितिस्तत्राव्याप्तिरिति

न्वे न उक्तपक्षताश्रयत्वस्यपक्षलक्षणत्वात् सपक्षलक्षणमाह निश्चितेति एवं सद्धेतुंनिरूप्यअ
सद्धेतुंनिरूपयितुंविभजते सव्यभिचारेति अनुमितिप्रतिबंधकयथार्थज्ञानविषयत्वंहेत्वाभास
त्वं सव्यभिचारंविभजते सत्रिविधइति साधारणंलक्षयति तत्रेति उदाहरति यथेति असाधारणंलक्षयति
सर्वेति अनुपसंहारिणोलक्षणमाह अन्वयव्यतिरेकेति विरुद्धंलक्षयति साध्याभावेति सत्प्रतिप
क्षंलक्षयति यस्येति असिद्धंविभजते असिद्धइति आश्रयासिद्धमुदाहरति गगनेति स्वरूपासि
द्धमुदाहरति शब्दइति व्याप्यत्वासिद्धस्यलक्षणमाह सोपाधिकइति उपाधिलक्षणमाह साध्ये
ति उपाधिश्चतुर्विधः केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्न-
साध्यव्यापकः उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति आद्यआर्द्रेंधनसंयोगः द्वितीयोयथा १५
वायुःप्रत्यक्षःप्रमेयत्वादित्यत्रबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकंउद्भूतरूपवत्त्वं तृतीयोयथा

सश्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वावच्छिन्नश्यामत्वस्यव्यापकं शाकपाकजत्वं प्रकारांतरेण तृतीयोयथा ध्वंसोविनाशी जन्यत्वादित्यत्रजन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् चतुर्थस्तुप्रागभावोविनाशी प्रमेयत्वादित्यत्रजन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वं बाधितस्यलक्षणमाह यस्येति अत्रबाधस्यग्राह्याभावनिश्चयत्वेनसप्रतिपक्षस्यविरोधिज्ञान सामग्रीत्वेनसाक्षादनुमितिप्रतिबंधकत्वंइतरेषांतुपरामर्शप्रतिबंधकत्वम् तत्रापिसाधारणस्या व्यभिचाराभावतयाविरुद्धस्यसामानाधिकरण्याभावतयाव्याप्यत्वासिद्धस्यविशिष्टव्याप्त्यभावतया असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेननचव्याप्तिज्ञानप्रतिबंधकत्वम् आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबंधकत्वं उपाधिस्तु व्यभिचारज्ञानद्वाराव्याप्तिज्ञान प्रतिबंधकः सिद्धसाधनंतुपक्षताविघटनतया आश्रयासिद्धे अंतर्भवति निग्रहस्थानांतरमिति

नवीनाः उपमानंलक्षयति उपमितीति शब्दंलक्षयति आप्तेति पदलक्षणमाह शक्तमिति
अर्थस्मृत्यनुकूलः पदपदार्थसंबंधःशक्तिः सात्वपदार्थांतरमितिमीमांसकाः तन्निरासार्थमा
ह अस्मादिति डित्थादीनामिवघटादीनामपिसंकेतएवशक्तिः नतुपदार्थांतरमित्यर्थः ग
वादिशब्दानांजातावेवशक्तिः विशेषणतयाजातेःप्रथममुपस्थितत्वात् व्यक्तिलाभस्तु
आक्षेपादिनाइतिकेचित् तन्न गामानयेत्यादौवृद्धव्यवहारे सर्वत्रानयनादेर्व्यक्तावेवसंभ
वेनजातिविशिष्टव्यक्तावेवशक्तिकल्पनात् शक्तिग्रहश्चवृद्धव्यवहारेण व्युत्पित्सुर्बालोगा-
मानयेत्युत्तमवृद्धवाक्यश्रवणानंतरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्यगवानयनंदृष्ट्वा मध्यम
वृद्धप्रवृत्तिजनकज्ञानस्य अन्वयव्यतिरेकाभ्यांवाक्यजन्यत्वं निश्चित्य अश्वमानयगां
बंधानेतिन्यावक्यांतरे आवापोद्धापाभ्यांगोपदस्यगोत्वविशिष्टेशक्तिः अश्वपदस्य अश्वत्व

विशिष्टइतिव्युत्पद्यते ननुसर्वत्रकार्यपरत्वाद्व्यवहारस्यकार्यपरवाक्यएवव्युत्पत्तिः नसिद्धप
राइतिचेन्न कांच्यांत्रिभुवनतिलकोभूपतिरित्यादौसिद्धेपिव्यवहारात् विकसितपद्मेमधुकर
इत्यादौप्रसिद्धपदसमभिव्याहारात् सिद्धेपिमधुकरादिपदेव्युत्पत्तिदर्शनाच्च लक्षणापिशब्द
वृत्तिः शक्यसंबंधोलक्षणा गंगायांघोषइत्यत्रगंगापदवाच्यप्रवाहसंबंधादेवतीरोपस्थि
तौतीरेपिशक्तिर्नकल्प्यते सैंधवादौलवणाश्वयोः परस्परसंबंधाभावान्नानाशक्तिकल्पना लक्ष
णात्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणाचेति यत्रवाच्यार्थस्यान्वयाभावस्तत्रज
हतीति यथामंचाःक्रोशंतीति यत्रवाच्यस्यापिअन्वयस्तत्रअजहतीति यथाछत्रिणोगच्छंतीति
यत्रवाच्यैकदेशत्यागेनएकदेशान्वयस्तत्रजहदजहती यथातत्वमसीति गौण्यपिलक्षणैव
लक्ष्यमाणगुणसंबंधरूपा अग्निर्माणवकइति व्यंजनापिशक्तिलक्षणांतर्भूता अर्थशक्तिमूला

च अनुमानादिनाअन्यथासिद्धा तात्पर्यानुपपत्तिर्लक्षणाबीजम् तत्प्रतीतीच्छयाउच्चरितत्वंता
त्पर्यम् तात्पर्यज्ञानंचवाक्यार्थज्ञानहेतुः नानार्थानुरोधात् प्रकरणादिकं तात्पर्यग्राहकम् द्वारमि
त्यादौपिधेहीतिशब्दाध्याहारः ननुअर्थज्ञानार्थत्वात् शब्दस्यअर्थमविज्ञायशब्दाध्याहारासंभ
वात् अर्थाध्याहारोयुक्तइतिचेन्न पदविशेषजन्यपदार्थोपस्थितौशब्दज्ञानहेतुत्वात् अन्य-
थाघटःकर्मत्वंआनयनंकृतिरित्यत्रापिशाब्दज्ञानप्रसंगात् योगोरूढिर्योगरूढिश्चेतिशक्ति
स्त्रिविधा पाचकादिपदेषुयोगः घटादिपदेषुरूढिः पंकजादिपदेषुयोगरूढिः अवयवशक्तिर्योगः समुदा
यशक्तिःरूढिः नियतपद्मज्ञानार्थसमुदायशक्तिः अन्यथाकुमुदेपिप्रयोगप्रसंगः इतरान्वितेशक्तिरि-
तिप्राभाकराः अन्वयस्यवाक्यार्थतयाभानसंभवादन्वयांशेपिशक्तिर्नकल्पनीयेतिगौतमीयाः
आकांक्षेति आकांक्षादिज्ञानमित्यर्थः अन्यथा आकांक्षादिभ्रमात् शाब्दधीभ्रमोनस्यात्

आकांक्षांलक्षयति पदस्येति योग्यतालक्षणमाह अर्थेति सन्निधिलक्षणमाह पदानामिति अ
विलंबेनपदार्थोपस्थितिः संनिधिः उच्चारणंतु तदुपयोगितयायुक्तं गौरश्वःपुरुषइति घटःकं
र्मत्वं इत्यनाकांक्षोदाहरणंद्रष्टव्यम् वैदिकस्यविशेषमाह वैदिकंईश्वरोक्तत्वादिति ननुवैदिकस्य
अनादिकत्वात्कथमीश्वरोक्तत्वमितिचेन्न वेदःपौरुषेयः वाक्यसमूहत्वात् भारतादिवत् नच
स्मर्यमाणकर्तृकत्वंउपाधिः गौतमादिभिः शिष्यपरंपरयावेदेपि कर्तृस्मरणेनसाधनव्यापक-
त्वात् तस्मात्तेपानात्त्रयोवेदाअजायंतइतिश्रुतेश्च ननुवर्णानित्याः सएवायंगकारइति प्रत्यभि
ज्ञाबलात् तथाच कथंवेदस्यानित्यत्वमितिचेन्न उत्पन्नोगकारो विनष्टोगकारइतिप्रतीत्यावर्णा
नामनित्यत्वात् सोयंगकारइतिप्रत्यभिज्ञायाः सेयंदीपज्वालेतिवज्जात्यालंबनत्वात् वर्णानां
नित्यत्वेपि आनुपूर्वीविशिष्टवाक्यस्यानित्यत्वाच्च तस्मादीश्वरोक्तोवेदः मन्वादिस्मृतीनामाचारा

णांचवेदमूलकतया प्रामाण्यम् स्मृतिमूलवाक्यानामिदानीमनध्ययनात् तन्मूलभूताकाचिच्छा
खाउत्पन्नेतिकल्प्यते ननुपठ्यमानवेदवाक्योत्सादस्यकल्पयितुमशक्यतयाविप्रकीर्णवादस्या
युक्तत्वान्नित्यानुमेयोवेदोमूलमितिचेन्न तथापिवर्णानुपूर्वीज्ञानाभावेनबोधकत्वासंभवात्
नन्वेतानिपदानिस्मारितार्थसंसर्गवंति आकांक्षादिमत्पदकदंबकत्वात् सद्वाक्यवदित्यनुमा
नादेवसंसर्गज्ञानसंभवात् शब्दोनप्रमाणांतरमितिचेन्न अनुमित्यपेक्षयाशाब्दज्ञानस्यविल
क्षणस्यशाब्दात्प्रत्येमीत्यनुव्यवसायसाक्षिकस्यसर्वसंमतत्वात् नन्वर्थापत्तिरपिप्रमाणांतरम
स्ति पीनोदेवदत्तोदिवानभुंक्तेइतिदृष्टेश्रुतेवापीनत्वान्यथानुपपत्त्यारात्रिभोजनं अर्थापत्त्या-
कल्प्यतेइतिचेन्न देवदत्तोरात्रौभुंक्ते दिवा अभुंजानत्वेसतिपीनत्वात् इत्यनुमानेनैवरात्रि
भोजनस्यसिद्धत्वात् शतंपंचाशदितिसंभवोप्यनुमानमेव इहवटेयक्षस्तिष्ठतीत्यैतिह्यमपि

अज्ञानमूलवक्तृकः शब्द एव चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न मानांतरं तस्मात्प्रत्य-
क्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि सर्वेषां ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतो ग्राह्यं परतो
वेति विचार्यते तत्र विप्रतिपत्तिः ज्ञानप्रामाण्यं तदप्रामाण्यग्राहकयावज्ज्ञानग्राहकसामग्री
ग्राह्यं न वा अत्र विधिकोटिः स्वतस्त्वं निषेधकोटिः परतस्त्वं अनुमानग्राह्यत्वेन सिद्धसाधनता
वारणाय यावदिति इदं ज्ञानमप्रमेति ज्ञानेन प्रामाण्याग्रहात् बाधवारणाय अप्रामाण्यमग्राहके
ति इदं ज्ञानं अप्रमेत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्य अप्रामाण्याग्राहकत्वाभावात् स्वत-
स्त्वं न स्यादतस्तादिति तस्मिन्प्रामाण्याश्रये अप्रामाण्याग्राहकेत्यर्थः उदाहृतस्थले व्यवसाये अ
प्रामाण्याग्राहकस्यापि अनुव्यवसायेन तदग्राहकत्वात् स्वतस्त्वसिद्धिः ननु स्वत एव प्रामाण्यं गृ
ह्यते घटमहं जानामीत्यनुव्यवसायेन घटघटत्वयोरिव तत्संबंधस्यापि विषयीकरणात् व्यव

सायरूपप्र त्यासत्तेस्तुल्यत्वात्पुरोवर्त्तिनिप्रकारसंबधस्यैवप्रमात्वपदार्थत्वादितिचेन्न स्वतः
प्रामाण्यग्रहेजलज्ञानंप्रमानवेत्यनभ्यासदशायांप्रमात्वसंशयोनस्यात् अनुव्यवसायेनप्रामा
ण्यस्यनिश्चितत्वात् तस्मात्स्वतोग्राह्यत्वाभावात्परतोग्राह्यत्वम् तथाहि प्रथमंजलज्ञाना
नंतरंप्रवृत्तौसत्यांजललाभेसतिपूर्वोत्पन्नंजल ज्ञानंप्रमा समर्थप्रवृत्तिजनकत्वात् यन्नैवंतन्नै
वं यथाअप्रमेतिव्यतिरेकिणाप्रमात्वंनिश्चीयते द्वितीयादिज्ञानेषुपूर्वज्ञानदृष्टांतेनतत्सजा
तीयत्वलिंगेन अन्वयव्यतिरेकिणापिगृह्यते प्रमायांगुणजन्यत्वंउत्पत्तौपरतस्त्वं प्रमासा
धारणकारणंगुणाः अप्रमाऽसाधारणकारणंदोषः तत्रप्रत्यक्षेविशेषणवद्विशेष्यसन्निक-
र्षोगुणः अनुमितौव्यापकवद्व्याप्यज्ञानं उपमितौयथार्थसादृश्यज्ञानं शब्दज्ञानेयथार्थयो
ग्यताज्ञानमित्याद्यूहनीयम् पुरोवर्त्तिनिप्रकाराभावस्यव्यवसायेन अनुपस्थितत्वादप्रमात्वं

परत्वएवगृह्यते पित्तादिदोषजन्यत्वादुत्पत्तौपरतस्त्वं ननुसर्वज्ञानानांयथार्थत्वात् अयथार्थज्ञा
नमेवनास्ति नन्वशक्तोऽइदंरजतमितिज्ञानात्प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरितिवाच्यम् र
जतस्मृतिपुरोवर्तिज्ञानाभ्यामेवप्रवृत्तिसंभवादुपस्थितेष्टभेदाग्रहस्यैवसर्वत्रप्रवर्त्तकत्वेन इदंर
जतमित्यादावतिप्रसंगाभावादितिचेन्न सत्यरजतस्थलेपुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञान
स्यलाघवेनप्रवृत्तिजनकतयाशुक्तावपिरजतार्थिप्रवृत्तिजनकत्वेनविशिष्टज्ञानस्यैवकल्पना
त् अयथार्थानुभवंविभजते अयथार्थेति स्वप्नस्यमानसविपर्ययरूपत्वा न्नत्रैविध्यविरोधः
संशयलक्षणमाह एकस्मिन्निति घटपटाविति समूहालंबनातिव्याप्तिवारणायैकस्मिन्निति
घटोद्रव्य मित्यादावतिव्याप्तिवारणायविरुद्धेति पटत्वविरुद्धघटत्ववानित्यत्रातिव्याप्तिवा
रणायनानेति विपर्ययलक्षणमाह मिथ्येति तदाभाववतितत्प्रकारकनिश्चयइत्यर्थः तर्कलक्षण

तिव्याप्येति यद्यपितर्कोविपर्यये अंतर्भवतितथापिप्रमाणानुग्राहकत्वात्भेदेनकीर्त्तनं स्मृतिंवि-
भजते स्मृतिरिति सुखंलक्षयति सर्वेषामिति सुखमहमित्याद्यनुव्यवसायगम्यंसुखत्वादिक मे
वलक्षणम् यथाश्रुतंतुस्वरूपकथनमितिद्रष्टव्यम् संस्कारंविभजते संस्कारइति संस्कारत्व
जातिमान्संस्कारः वेगस्य आश्रयमाह वेगइति वेगत्वजातिमान्वेगः भावनांलक्षयति अ
नुभवेति अनुभवध्वंसेऽतिव्याप्तिवारणायस्मृतीति स्मृतेरपिसंस्कारजनकत्वंनवीनैरुक्तम्
स्थितिस्थापकंलक्षयति अन्यथेति संख्यादयोष्टौनैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामा
न्यगुणाः अन्यरूपादयोविशेषगुणाः द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमत्त्वं
विशेषगुणत्वं कर्मणोलक्षणमाह चलनेति उत्क्षेपणादीनांकार्यभेदमाह ऊर्ध्वेति शरीरेति व
क्रतासंपादकमाकुंचनम् ऋजुतासंपादकंप्रसारणमित्यर्थः सामान्यंलक्षयति नित्यमिति प

रमाणुपरिमाणादावतिव्याप्तिवारणाय अनेकेति अनुगतत्वंसमवेतत्वं तेननअभावादावति
व्याप्तिः विशेषंलक्षयति नित्येति समवायंलक्षयति नित्यइति संयोगेऽतिव्याप्तिवारणाय
नित्येति आकाशादावतिव्याप्तिवारणायसंबंधइति ननुसमवायसत्वेकिंप्रमाणमितिचेन्न
अयुतसिद्धलक्षणमाह ययोरिति नीलोघटइतिविशिष्टप्रतीतिः विशेषणविशेष्यसंबंधवि
षया विशिष्टप्रत्य यत्वात् दंडीतिप्रत्ययवत् इतिसमवायसिद्धिः अवयवावयविनावि
ति द्रव्यसमवायिकारणमवयवः जन्यद्रव्यमवयवि प्रागभावंलक्षयति अनादिरिति
आकाशादावतिव्याप्तिवारणायसांतइति घटादावतिव्याप्तिवारणायानादिरिति प्रतियोगि
समवायिकारणवृत्तिःप्रतियोगिजनकःभविष्यतीतिव्यवहारहेतुःप्रागभावः ध्वंसंलक्षयति
सादिरिति घटादावतिव्याप्तिवारणाय अनंतइति आकाशादावतिव्याप्तिवारणायसादिरिति

प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्ति ध्वस्तव्यवहारहेतुर्ध्वंसः अत्यंताभावं ल
क्षयति त्रैकालिक इति अन्योन्याभावे ऽतिव्याप्तिवारणाय संसर्गावच्छिन्नेति ध्वंसप्रागभावयो
रतिव्याप्तिवारणाय त्रैकालिक इति अन्योन्याभावं लक्षयति तादात्म्येति घटः पटो न भवतीति
प्रतियोगितावच्छेदकतयारोपासंसर्गभेदादेकप्रतियोगिकयोरत्यंताभावान्योन्याभावयोर्ब
हुत्वं केवलदेवदत्ताभावो दंड्यभावः केवलदेवदत्तसद्भावेपि दंडाभावे दंड्यभाव इति प्रतीत्या
विशिष्टाभावः एकसत्वे द्वौ न स्त इति प्रतीत्या द्वित्वावच्छिन्नाभावः संयोगसंबंधेन घटवति समवाय
संबंधेन घटाभावः तत्तद्घटाभावाद्घटत्वावच्छिन्नप्रतियोगिकसामान्याभावः अतिरिक्तः एवमन्यो
न्याभावोपि घटत्वावच्छिन्नः पटो नास्तीति व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो नांगी
क्रियते पटे घटत्वं नास्तीति तदर्थः अतिरिक्तत्वे स केवलान्वयी सामयिकाभावोत्यंताभाव एव

समयविशेषेप्रतीयमानः घटाभाववतिघटानयनेअत्यंताभावस्यान्यत्रगमनाभावेअप्रतीतेः
घटापसरणेसतिप्रतीतेः भूतलघटसंयोगप्रागभावप्रध्वंसयो रत्यंताभावप्रतीतिनियामकत्वंक
ल्प्यते घटवतितत्संयोगप्रागभावध्वंसयोरसत्वात् अत्यंताभावस्याप्रतीतिः घटापसरणेत्त्वसंयो
गध्वंससत्वात्प्रतीतिरिति केवलाधिकरणादेवनास्तीतिव्यवहारोपपत्तौ अभावोनपदार्थांत
रमितिगुरवःतन्न अभावानंगीकारेकेवलस्यनिर्वक्तुमशक्यत्वात् अभावाभावोभावएव ना
तिरिक्तःअनवस्थाप्रसंगात् ध्वंसप्रागभावःप्रागभावध्वंसश्चप्रतियोग्येव अभावाभावोऽति
रिक्तएव तृतीयाभावस्यप्रथमत्वान्नानवस्थेतिनवीनाः ननुप्रमाणप्रमेयसंशयप्रयोजनदृ
ष्टांतसिद्धांतावयवतर्कनिर्णयवादजल्पवितंडाहेत्वाभासच्छलजातिनिग्रहस्थानानांतत्त्वज्ञा
नान्निःश्रेयसाधिगमइतिन्यायशास्त्रेषोडशपदार्थानामुक्तत्वात्कथंसप्तैवेत्यत आह सर्वेषा

मिति सर्वेषांसप्तस्वेवांतर्भावइत्यर्थः आत्मशरीरेंद्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफ
लदुःखापवर्गास्तुप्रमेयमितिद्वादशविधंप्रमेयम् प्रवृत्तिधर्माधर्मौ रागद्वेषमोहादोषाः रागः
इच्छादोषोमन्युः मोहःशरीरादावात्मभ्रमः प्रेत्यभावोमरणं फलंभोगः अपवर्गोमोक्षः सच
स्वसमाना धिकरणदुःखप्रागभावासमानकालीनोदुःखध्वंसः प्रयोजनंसुखं दुःखहानि
श्च दृष्टांतोमहानसादिः प्रामाणिकत्वेनाभ्युपगतोर्थःसिद्धांतः निर्णयोनिश्चयःप्रमाणफलं
तत्वबुभुत्सोःकथावादः उभयसाधनवतीविजिगीषुकथाजल्पः स्वपक्षस्थापनहीनावितंडा
कथानामनानावक्तृकःपूर्वोत्तरपक्षवाक्यसंदर्भः अभिप्रायांतरेणप्रयुक्तस्य अर्थांतरंप्रकल्प्य
दूषणंछलं असदुत्तरंजातिः साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्प्यसाध्यप्राप्त्यप्रा- २१
प्तिप्रसंगप्रतिदृष्टांतानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्यविशेषोपलब्ध्यनुपलब्धिकारणनित्या

नित्यकार्यसमाजातय: वादिनोपजयहेतुर्निग्रहस्थानं प्रतिज्ञाहानि: प्रतिज्ञांतरं प्रतिज्ञाविरो
ध: प्रतिज्ञासंन्यासो हेत्वांतरमर्थांतरं निरर्थकमविज्ञातार्थोऽपार्थकमप्राप्तकालंन्यूनमधिकंपुनरुक्त
मननुभाषणमज्ञानमप्रतिक्षेपोऽमतानुज्ञ पर्यनियोज्यापेक्षणं निरनुयोज्यानुयोगोऽपसिद्धांतो
हेत्वाभासश्चनिग्रहस्थानानि शेषंसुगम ननुकरतलानलसंयोगेसत्यपि प्रतिबंधकेसति दाहानुत्प
त्तेः शक्तिः पदार्थांतरमितिचेन्न प्रतिबंधकाभावाश्च कार्यमात्रेकारणत्वेन शक्तेरनुपयो-
गात् कारणस्यैवशक्तिपदार्थत्वमिति ननुभस्मादिनाकांस्यादौशुद्धिदर्शनात् आधेयशक्तिरं
गीकार्येतिचेन्न भस्मादिसंयोगसमानकालीनस्पृश्यस्पर्शप्रतियोगिकयातद्भावसहित भस्मादि
संयोगध्वंसस्यशुद्धिपदार्थत्वात् स्वत्वमपिनपदार्थांतरंयथेष्टविनियोगयोग्यत्वस्यस्वत्वस्वरू-
पत्वात् तदवच्छेदकंचप्रतिग्रहादिलब्धत्वमेवेति अथविधिर्निरूप्यते प्रत्यवायजनक

चिकीर्षाजनकज्ञानविषयो विधिः तत्प्रतिपादको लिङादिर्वा कृत्यसाध्ये प्रवृत्तिदर्शनात् कृतिसाध्यताज्ञा-
नं प्रवर्तकं न च विषभक्षणादौ प्रवृत्तिप्रसंगः इष्टसाधनताप्रेरककृतिसाध्यताज्ञानस्य काम्यस्थ-
ले विहितकालजीवित्वस्य निमित्तज्ञानजन्यत्वस्याननुगतत्वादिति गुरवः तन्न लाघवेन कृति-
साध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात् न च नित्ये इष्टसाधनताज्ञानाभावा
दप्रवृत्तिप्रसंगः तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात् तस्मात्कृतिसा-
ध्येष्टसाधनत्वमेव लिङाद्यर्थः ननु ज्योतिष्टोमेन स्वर्गकामो यजेते त्यत्र लिङा स्वर्गसाधनं कार्यं प्रती
यते यागस्य आशु विनाशिनः कालोत्तरभाविस्वर्गसाधनत्वायोगात् योग्यं स्थायि कार्यं अपू
र्वमेव लिङर्थः कार्यं कृतिसाध्यं कृतेः सविषयत्वात् विषयाकांक्षायां यागो विषयत्वेनान्वितस्य का
र्यमिति नियोज्याकांक्षायां स्वर्गकामपदं नियोज्यपरतयान्वितकार्यबोद्धा नियोज्यः तेन ज्योति-

श्येनामकयागविषयकं स्वर्गकामस्य कार्यमिति वाक्यार्थः संपद्यते वैदिकलिङ्त्वात् याव-
ज्जीवमग्निहोत्रं जुहुयादिति नित्यवाक्येऽप्यपूर्वमेव कल्प्यते आरोग्यकामी भेषजपानं कुर्यादि-
त्यादौ लौकिकलिङ् क्रियारूपकार्यलक्षणेति चेन्न यागस्याप्ययोग्यतानिश्चयाभावेन साधन
तयाप्रतीत्यनंतरं तन्निर्वाहार्थमवांतरव्यापारतयाऽपूर्वकल्पनात्कीर्तनादिनानश्युतेस्तेन यागध्वंसोव्या
पारः लौकिकव्युत्पत्तिबलात् वेदादावपिकृतिसाध्यत्वं लिङा बोध्यत इति लिङ्रूपत्वेन रू
पेण विध्यर्थत्वं आख्यातार्थत्वेन प्रयत्नार्थकत्वं पचतिपाकं करोतीति विवरणदर्शनात् किं करोती
ति प्रश्ने पचतीत्युत्तराच्चाख्यातस्य प्रयत्नार्थत्वनिश्चयात् रथो गच्छतीत्यादावनुकूलव्या
पारे लक्षणा देवदत्तः पचति तंदुलादेवदत्तेन पच्यंते तंदुल इत्यादौ कर्तृकर्मणोर्नाख्याना
र्थत्वं किंतु तद्गतैकत्वादिनामेव तयोराक्षेपादेव लाभः प्रयजतीत्यादौ धातोरेव प्रकर्षे श-

त्तिः उपसर्गाणां द्योतकत्वमेव न तत्र शक्तिरस्ति पदार्थज्ञानस्य परमं प्रयोजनं मोक्षः तथाहि
आत्मा वारे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य इति श्रवणादीनां साक्षात्कारहेतुत्वबोधनात्
श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यपि असंभावनानिवृत्तेर्युक्त्यनुबंधानुरूपं मननःसाध्यत्वात्
मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षयोगः तदनंतरं श्रुत्योपदिष्टयोगविधिना-
निदिध्यासने कृते तदनंतरं देहादिविलक्षणसाक्षात्कारे सति देहादावभिमानरूपमिथ्याज्ञाननाशे
सति दोषाभावात् प्रवृत्त्यभावे धर्माधर्मयोरभावात् जन्माभावे पूर्वधर्माधर्मयोरनुभावेन नाशे च-
रमदुःखध्वंसलक्षणो मोक्षो जायते ज्ञानमेव मोक्षसाधनम् मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्रसाध्य-
त्वात् तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेयनायेती साधनानंतरविषेधाच्च ननु तत्प्रा-
प्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने इति कर्मणोपि मोक्षसाधनत्वस्मरणात् ज्ञानकर्मणोः समुच्च

यइतिचेन्न निखनैमित्तिकैरेव कर्मभिर्दुरितक्षयं ज्ञानंच विमलीकुर्वन्नभ्यासेनच पावयेत् अ
भ्यासात्पक्वविज्ञानं कैवल्यंलभतेनरः इत्यादिनाकर्मणोज्ञानसाधनत्वप्रतिपादनात् ज्ञान
द्वारैवकर्ममोक्षसाधनं नसाक्षात् तस्मात्पदार्थज्ञानात् मोक्षः परमंप्रयोजनमितिसर्वंरमणी
यम्॥ ॥ ० ॥ ॥ ० ॥ इत्यनंतभट्टोपाध्यायकृततर्कसंग्रहदीपिकासमाप्ता ॥ ० ॥
यादृशंपुस्तकंदृष्टं तादृशंलिखितंमया ॥ यदिशुद्धमशुद्धंवाममदोषोनविद्यते ॥ १ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ ० ॥ ॥ ० ॥ हेंपुस्तक मुंबईत राजेश्रीकृष्णशास्त्रीगुर्जरयांणी आपले ॥ ० ॥ ॥ ० ॥ ० ॥

॥ ० ॥ ॥ ० ॥ ग्रंथप्रकाशकछापखान्यात छापिलें. शकं १७८५ रुधिरोद्गा ॥ ० ॥ ० ॥ ० ॥

॥ ० ॥ रीनामसंवत्सरे. माहेश्रावण कृष्ण ८ भृगुवासरे ॥ ० ॥





इतितर्कसंग्रह्दीपिका समाप्त



